जन्ममरणान्तरे कृतकर्मसमूहो विचित्रफलद उद्भूतत्वादिभिः क्रमेण फलदो मरणेन कार्यारम्भाभिमुख्यं नीतः युगपदेकलोलीभावापन्न एकं जन्म करोति, तेनैव कर्मणा तत्र लब्धायुष्को भोगवांश्चेति स त्रिविपाकः; एवमेषः अदृष्टजन्मवेदनीयः कर्माशयः । एकजन्मावच्छिन्नक्लेशकर्मविपाकानुभवजा. स्मृतिहेतुसंस्काररूपा वासनास्तु अनादयोऽनेकजन्मपूर्विका. । अतएव मनुष्यस्तिर्यग्योनिमापन्नस्तज्जातीयोचितभोजने प्रवर्तते । स कर्माशयो द्विविध । आरब्धफलोऽनारब्धफलश्च । तत्रारब्धफल उक्त एकजन्मावच्छिन्नः । अनारब्धफलोऽपि त्रिविधः शुक्लः कृष्णः शुक्लकृष्णश्च । परपीडारहिततप स्वाध्यायादि आद्य स उदित एवान्ययोर्द्वयोर्नाशक इति तस्यैका गतिरनारब्धफलस्य । किंचित्तु कृष्णं कर्म यज्ञान्तर्गतपशुहिंसादिजन्यं पापम् । अनारब्धफलमपि प्रधानकर्मविपाकेन सहात्मफलदम् । एतदेव प्रधानकर्मण्यावापगमनम् । एतदन्तर्गतपशुहिंसादि च प्रधानाङ्गत्वेन विधानात् तदुपकारकं, न हिंस्यादिति निषेधात्पापजनक च ॥ एतदेव यज्ञादि कृष्णशुक्लम् । किंचित्त्वनारब्धफलमारब्धविपाककर्मणाऽभिभूतं चिरमवतिष्ठते यावत्तदभिव्यञ्जककालागमनम् । दृष्टजन्मवेदनीयस्तु एकविपाकारम्भी भोगहेतुत्वात् । द्विविपाकारम्भी वा भोगायुर्हेतुत्वात् । एवं कर्मगतिश्चित्रा दुर्विज्ञाना चेति भाष्ये स्पष्टम् ॥ १३ ॥

उक्ताभ्यां कर्मतद्विपाकाभ्यां द्वाराभ्यां क्लेशानां मुख्यं फलमनर्थमाह—

## ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥ १४ ॥

ते विपाकाः सर्व एव समुचितसुखदुःखफलकाः समुचितपुण्यापुण्यहेतुत्वादित्यर्थ. । सुखदुःखयोश्च फलं पुरुषस्य भोग इति प्रसिद्धत्वान्नोक्तम् । तदित्थमनर्थहेतुत्वात्क्लेशास्तनूकरणादिक्रमेण हेया इति प्रघट्टकार्थ. ॥ १४ ॥

अथैतेषां सर्वेषां त्याज्यतामूलं विपाकानां फलमाह—**ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात्** । ते जन्मायुर्भोगा. समुचितपुण्यापुण्यहेतुकत्वात्समुचितसुखदु खफलका इत्यर्थ । एवं पुण्यहेतुका सुखफला अपुण्यहेतुकाश्च दु खफला इति । ननु सुखदु खानन्तरभावी तदनुभवात्मा भोग इति कथं भोगफलत्वमेतयोरिति चेन्न । भोगविषयतामात्रेण तत्फलत्वात् । यद्वा कर्मकरणव्युत्पत्त्या भोगशब्देन विषया इन्द्रियाण्येव तत्र, अत्र च सुखदु खशब्दौ तद्भोगपरौ । तदित्थमनर्थहेतुत्वात्क्लेशा तनूकरणादिक्रमेण हेया इति प्रघट्टकार्थः ॥ १४ ॥

नन्वेवं यथा दुःखनिदानत्वेन क्लेशा हेयास्तथा सुखनिदानत्वेनोपादेया अपि स्युस्तत्राह—

## परिणामतापसंस्कारदुःखैर्गुणवृत्त्यविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥ १५ ॥

परिणामश्च तापश्च संस्कारश्च तज्जन्यानि दुःखानि । तैः संबन्धात्तत्कारणत्वादिति यावत् । तथा गुणानां सत्वरजस्तमसां या वृत्तयः सुखदुःखमोहास्ता-

**सामेककालानवस्थानरूपविरोधाभावाच्च सर्वं प्रकृतितत्कार्यसुखादिकं विवेकिनः सुखदुःखतत्त्वसाक्षात्कारिणो दुःखमेव मतम्, दुःखकारणत्वदुःखसंभिन्नत्वाभ्यामित्यर्थः। तथाच सुखरागापेक्षया दुःखद्वेषस्य बलवत्त्वात्सुखापेक्षया दुःखप्राचुर्याच्च सुखमपि दुःखयोगाद्धेयमिति भावः। तत्र परिणामदुःखं यथा सुखभोगकाले सुखे रागो हिंसादिकं च तन्नान्तरीयकं भवति। ताभ्यां चादृष्टादिद्वारोत्तरकाले दुःखमिति। तापदुःखं च दुःखकालेऽप्यनुतापादिभिर्दुःखान्तरम्। संस्कारदुःखं तु सुखदुःखसंस्कारतत्साधनेषु प्रवृत्तिनिवृत्त्याद्युत्थं दुःखमिति गुणवृत्त्यविरोधात्सुखकालेऽपि सूक्ष्मं दुःखमनुमेयं, सर्वकार्याणां त्रिगुणात्मकत्वादिति॥ १५॥**

ननु दुःखनिदानत्वेन हेयत्ववत्सुखनिदानत्वेनोपादेयत्वमपि स्यादत आह—
**परिणामतापसंस्कारदुःखैर्गुणवृत्त्यविरोधाच्च सर्वमेव दुःखं विवेकिनः।** परिणामश्च तापश्च संस्कारश्च तज्जन्यानि दुःखानि तैः संबन्धात् तत्कारणत्वात्, तथा गुणानां सत्त्वरजस्तमसां या वृत्तयः सुखदुःखमोहास्तासामेककालानवस्थानरूपविरोधाभावाच्च सर्वं प्रकृतिस्तत्कार्यसुखादिकं च विवेकिनः सुखदुःखतत्त्वसाक्षात्कारवतो दुःखमेव मतम्। दुःखकारणत्वदुःखसंभिन्नत्वाभ्यामित्यर्थः। तथाच सुखरागापेक्षया दुःखद्वेषस्य बलवत्त्वात्सुखापेक्षया दुःखस्य प्राचुर्याच्च सुखमपि दुःखयोगाद्धेयमिति भावः। तत्र परिणामदुःखं यथा सुखभोगकाले सुखे रागस्तत्प्रतिघातके द्वेषः। विना प्राणिवधमुपभोगाभावेन हिंसादिकं च तन्नान्तरीयकं भवति। ताभ्यां चादृष्टादिद्वारोत्तरकाले दुःखमिति। अतएव विषयसुखमविद्या विपर्यासलक्षणेति वृद्धाः। नच विषयतृष्णैव दुःखं भोगेन तृष्णा तन्निवृत्तिरेव सुखमिति तस्या रागानुविद्धत्वाद्यभावेन न परिणामदुःखतेति वाच्यम्। तृष्णाक्षयस्य सुखत्वेऽपि भोगाभ्यासस्य तदनुपायत्वात्। तेन तृष्णावृद्धेरेव दर्शनात्। तस्याश्च दुःखरूपत्वात्। किंच तृष्णाक्षयसुखस्यापि बुद्धिधर्मत्वेन त्रिगुणत्वाद्दुःखरूपतया हेयमेवेति जैगीषव्यव्याधसंवादेन भाष्ये दर्शितं तृतीयपादे। तापदुःखं च सुखकालेऽन्यदीयाधिकसुखं दृष्ट्वा तापजं दुःखम्। तस्य द्वेषानुविद्धत्वाद्द्वेषजः कर्माशयः। तथा सुखसाधनप्रार्थनया कंचिदनुगृह्णाति कंचित्पीडयति। तत्र परानुग्रहपीडाभ्यां धर्माधर्मोपचयो भवतीत्येषा तापदुःखता। संस्कारदुःखं च सुखानुभवात्संस्कारातिशयेन तत्स्मरणं ततस्तदुपपादके रागस्तदुपघातके द्वेषः, ताभ्यां कर्माणि तेभ्यो विपाकास्ततस्तदनुभवस्ततो वासनेति। तदिदमनादिदुःखस्रोतो योगिनमेव क्लिश्नाति। निर्मूलत्वात्। यथोर्णातन्तुरक्षिणि न्यस्तो दुःखयति नान्यगात्रेषु। इतरं पृथग्जनं स्वकर्मोपहृतमुपात्तं दुःखं त्यजन्तं त्यक्तं त्यक्तमुपाददानमनादिवासनाविचित्रया चित्तवृत्तिरूपयाऽविद्यया हातव्येऽहंकारममकारौ कुर्वाणं सर्वे तापा उपतिष्ठन्ते। योगी त्वनादिदुःखोपहतः सर्वदुःखनाशकसम्यग्दर्शनमेव शरणीकरोति। गुणवृत्त्यविरोधाच्चेति। गुणाः सत्त्वरजस्तमांसि बुद्धिरूपेण परिणताः परस्परानुग्राहकस्वभावतयाऽविरुद्धास्त्रिगुणामेव सर्वां वृत्तिं जनयन्ति। उपादानकारणस्य त्रितयात्मकत्वात्कारणाभेदाच्च कार्यस्य। तेन सुखवृत्तिकालेऽपि सूक्ष्मं दुःखमनुसंधेयम्, क्षिप्रपरिणामितया

चित्तस्यात्यन्तास्थिरत्वाच्च । तद्वृत्तेरपि दुःखमयत्वं च । स्थूलसुखा सूक्ष्मदुःखा सुख-वृत्तिरित्युच्यते । स्थूलदुःखा सूक्ष्मसुखा च दुःखवृत्तिः । न संकरः । स्थूलानां स्थूलैः सह विरोधेऽपि सूक्ष्मैः सहाविरोध एव । उपादानकारणेनाप्यत्यन्ताभेदा-भावाद्बुद्धेः सुखमित्यादिव्यपदेशस्यापि न हानिः । सामान्यरूपेणाभेदः स्थूलात्मना च भेद इत्यवगन्तव्यम् । अस्य च महतो दुःखस्य मूलमविद्या । विवेकसाक्षात्का-राच्च तन्निवृत्तौ तन्मूलक्लेशान्तराणां निवृत्तिः । ततः कारणाभावाद्धर्माद्यनुत्पत्तिः । अनारब्धफलैश्च संचितकर्मभिः क्लेशाख्यसहकार्युच्छेदात्फलानुत्पादः । आरब्ध-फलकर्मणां च भोगादेव नाशे सति देहपाते कारणाभावादपुनर्जन्म । तदेव च दुःखनिवृत्तिरूपो मोक्ष इति दिक् । तदेतच्छास्त्रं चतुर्व्यूहं, हेयं, हेयहेतु, हानं, हानोपाय इति । दुःखं हेयम् । दुःखहेतुरविद्या । दुःखात्यन्तनिवृत्तिः हानम् । विवे-कसाक्षात्कारो हानोपाय । उपकरणसंग्रहाय सर्वत्र व्यूहपदं राश्यर्थकम् ॥ १५ ॥

तदेवमत्र पादे व्युत्थितचित्तस्य योगसाधनं क्रियायोगमुक्त्वा तत्फलप्रसङ्गेन क्लेशास्तद्धानप्रकारस्तेषां हेयत्वाय दुःखनिदानत्वं दुःखत्वं च प्रतिपादितम् । इदानीं संक्षेपेणोक्तं समस्तशास्त्रार्थमतिविस्तरतः प्रतिपादयिष्यति शास्त्रसमाप्ति-पर्यन्तैः सूत्रैः । तदादौ योगफलं परमपुरुषार्थमाह—

## हेयं दुःखमनागतम् ॥ १६ ॥

अतीतं स्वयमेव गतं, वर्तमानं च बहुकालसाध्यसाधनानुष्ठानात्प्रागेव तृतीयक्षणे नङ्क्ष्यति । अतः परिशेषादनागतावस्थमेव दुःखं योगादिभिर्हेय-मित्यर्थः ॥ १६ ॥

तत्रादौ हेयमाह—**हेयं दुःखमनागतम्** । अतीतं स्वयमेव नष्टम् । वर्त-मानं बहुकालसाध्यसाधनानुष्ठानात्प्रागेव तृतीयक्षणे नङ्क्ष्यति । परिशेषादनाग-तावस्थमेव दुःखं योगेन हेयमित्यर्थः ॥ १६ ॥

हेतूच्छेदे पुरुषव्यापाराद्धेयहेतुं प्रदर्शयति—

## द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥

सुखदुःखमोहात्मकाखिलदृश्याकारत्वेनाखिलदृश्यरूपया बुद्ध्या द्रष्टुः पुरु-षस्य जन्माख्यः संयोगविशेषो दुःखहेतुरित्यर्थः ॥ १७ ॥

हेतूच्छेदे पुरुषव्यापाराद्धेयहेतुमाह—**द्रष्टृदृश्ययोः संयोगो हेयहेतुः** । सुखमोहदुःखात्मकाखिलदृश्याकारत्वेनाखिलदृश्यरूपया बुद्ध्या तादृशबुद्धिप्रतिबि-म्बत्वेन द्रष्टुः पुरुषस्य यः संयोगो भोग्यभोक्तृत्वनियामको जन्माख्यः स दुःख-हेतुरित्यर्थः । दृश्यं हि अयस्कान्तमणिः स्वसंनिधिमात्रेण लोहमिव पुरुषमाकर्षति । पुरुषायात्यन्ताभेदेनात्मानं दर्शयति । तावतैव तद्रूपानुभवविषयतां चापद्यते । इद-मेव च तस्य दृश्यत्वम् । पुरुषस्य द्रष्टृत्वं च भोग्यभोक्तृत्वं च तत्स्वामित्वं च स च संयोगोऽनादिनिमित्ताविद्याप्रभवतयाऽनादिः । क्लेशकर्मतद्वासनासंतानोऽप्यनादिः । प्रतिसर्गावस्थायां सहान्तःकरणेन प्रधानसाम्यमुपगतोऽपि सर्गादौ पुनः कालव-

शादेव तादृगेव भवति । वर्षात्यये मृद्भावमुपगतो मण्डूको यथा वृष्टौ पुनर्मण्डूकभावमापद्यते तद्वत् । अयं हि संयोगश्चित्तस्यैव दुःखहेतुस्तस्मिंस्तु दुःखिते तदाकारानुरोधी दुःखित इवेति दिक् ॥ १७ ॥

द्रष्टृदृश्यसंयोगः सूत्रैर्लक्षणीयस्तत्रादौ दृश्यस्वरूपं लक्षयति—

## प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥ १८ ॥

प्रलये प्रकाशादिकार्याभावाच्छीलपदम् । अत्र प्रकाशो बुद्धिवृत्त्यादिरूपालोकः । क्रिया प्रयत्नचेष्टादिः । स्थितिश्च प्रकाशक्रिययोः प्रतिबन्धः । एतत्त्रयशीलं यच्छास्त्रप्रसिद्धं सत्वादिगुणत्रयं तद्दृश्यं पुरुषभोग्यत्वेन दृश्यशब्दवाच्यम् । तस्य प्रकाशादिरूपतायां हेतुगर्भं विशेषणं भूतेन्द्रियात्मकमिति । स्थूलसूक्ष्माणां भूतानां कारणं तेन स्थितिशीलत्वं लब्धम् । स्थूलसूक्ष्माणामिन्द्रियाणां च कारणम् । तेन प्रकाशक्रियाशीलत्वं लब्धम् । तत्र स्थूलेषु दशेन्द्रियेषु हेतुत्वात्क्रियाशीलत्वम् । सूक्ष्मेषु चान्तःकरणरूपेन्द्रियेषु हेतुत्वात्प्रकाशशीलत्वम् । इति गुणानां स्वरूपसत्ता । [तत्प्रवृत्ते.] प्रयोजनमाह भोगापवर्गार्थमिति । पुरुषस्य भोगापवर्गावेवार्थौ यस्य तथेत्यर्थः ॥ १८ ॥

तत्र दृश्यपदार्थमाह—**प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्** । प्रलये प्रकाशादिकार्याभावाच्छीलपदम् । तत्र प्रकाशो बुद्धिवृत्त्यादिरूपालोकस्तच्छीलं सत्वम् । क्रिया प्रयत्नचेष्टादिस्तच्छीलं रजः । स्थितिः प्रकाशक्रिययोः प्रतिबन्धस्तच्छीलं तमः । ते गुणाः परस्परोपरक्ता इतरेतराश्रयेण कार्यमारभन्ते । तत्र क्वचित्कार्ये जननीये एकस्य प्राधान्यमपरयोः सहकारित्वम् । यथा दिव्यशरीरे जनयितव्ये सत्त्वं प्रधानं, मानुषे रजः, तिर्यक्शरीरे तमः । ते च पुरुषस्य भोगापवर्गार्थं सन्निधिमात्रोपकारकतया प्रवर्तन्ते । तदाह—भूतेन्द्रियात्मकमिति । तत्र स्थूलसूक्ष्मभूतकारणत्वेन स्थितिशीलत्वं, स्थूलदशेन्द्रियहेतुत्वात्क्रियाशीलत्वं, अन्तःकरणरूपसूक्ष्मेन्द्रियहेतुत्वात्प्रकाशशीलत्वम् । तत्प्रवृत्ते प्रयोजनमाह—भोगापवर्गार्थमिति । तत्र सुखदुःखरूपाया बुद्धेः पुरुषेणाविभागापन्नतयावधारणं भोगः । भोक्तुः स्वरूपावधारणमपवर्ग इति भाष्यम् । तावेतौ भोगापवर्गौ बुद्धिकृतौ बुद्धावेव वर्तमानौ योद्धृगतजयपराजयौ राजनीव पुरुषे व्यपदिश्येते । बन्धमोक्षावप्येवमिति च भाष्यम् ॥ १८ ॥

नन्वेवं कारणरूपस्य सत्वादिगुणत्रयस्यैव दृश्यत्वं प्राप्तं न विकाराणामित्यतो गुणपर्वविधया कार्यकारणाभेदस्तानपि संगृह्णातीत्याह—

## विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ १९ ॥

सत्वादिगुणात्मको वंशः, तस्य विशेषादीनि पर्वाणि पत्रशाखाङ्कुरबीजवद्भेदात् नात्यन्तं भिन्नानीत्यर्थः । तत्र विशेषाः षोडश विकारा एकादशेन्द्रियप-

**ञ्चमहाभूतरूपाः । अविशेषाश्च पञ्चतन्मात्राहङ्काररूपाः षट् । लिङ्गमात्रं महत्तत्त्वम्, अलिङ्गं च साम्यावस्थितिः ॥ १९ ॥**

दृश्यानां गुणानां स्वरूपभेदमाह—**विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि** । सत्त्वादिगुणात्मकस्य वृक्षस्य पत्रशाखाङ्कुरबीजवदवस्थाभेदादेतानि पर्वाणि नात्यन्तं भिन्नानीत्यर्थः । तत्र विशेषाः एकादशेन्द्रियपञ्चमहाभूतरूपाः षोडशविकाराः शान्तघोरमूढलक्षणविशेषवत्त्वात् । तद्राहित्याच्च पञ्चतन्मात्राहंकाररूपाः षड्विशेषाः । शब्दस्पर्शरूपरसगन्धास्तन्मात्राणि एकद्वित्रिचतुःपञ्चलक्षणानि । आत्मना पूर्वेण शब्देन च द्विलक्षणं स्पर्शतन्मात्रमेवमुत्तरोत्तराणि आत्मना पूर्वाभ्यां पूर्वैश्च त्रिचतुःपञ्चलक्षणानीति बोध्यम् । सकलपुरुषार्थस्य शब्दादिभोगसत्त्वपुरुषान्यताख्यातिरूपस्य गमकत्वेन महत्तत्त्वं लिङ्गमात्रम् । क्वापि लयागमनादलिङ्गं प्रधानम् । तच्च गुणानां साम्यावस्थारूपम् । तच्च पुरुषार्थक्रियाक्षमत्वसत्ताभावादसत्, कार्यजनकत्वरूपसत्तावत्त्वात्सदिति चोच्यते । न सत् नासदिति चोच्यते । ताभ्यां च पुरुषार्थहेतुत्वासंभवात्सा नित्या । यदि सा भोगादिरूपपुरुषार्थहेतुः स्यात्तदा साम्यावस्थात्वमेव त्यज्येत । एवं च तस्याः पुरुषार्थकारणत्वाज्ञानान्न सा स्वतः पुरुषार्थहेतुः । अतो नित्या । महदाद्यवस्थास्तु पुरुषार्थहेतुत्वादनित्याः । तदुत्पत्तिलयव्यवहारेणैव गुणानां तद्व्यवहारो न तु स्वतो गुणानामुत्पत्तिर्लयो वास्ति । यथा धननाशाद्देवदत्तस्य नष्टत्वव्यवहारः ॥ १९ ॥

**सूत्राभ्यां दृश्यशब्दार्थो व्याख्यातः । द्रष्टृशब्दार्थो व्याख्यायते—**

## द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ २० ॥

**दृशिमात्रो ज्ञानमात्ररूपः द्रष्टृशब्दार्थः । तत्र प्रमाणमाह शेषेण, स च शुद्धोऽपीति । निर्विकारोऽपि प्रत्ययानुपश्यः । प्रत्ययं बौद्धं वृत्तिजातं तदनुकारीव सम्पश्यति । वृत्तेः स्वेनैव ग्रहणे कर्मकर्तृविरोधाद्वृत्तिप्रवाहकल्पने चानवस्थानाद्वृत्तिसाक्षितया पुरुषः सिध्यतीत्यर्थः । निर्विकारस्याप्यर्थग्रहणमनुशब्देनोपपादितम् । वृत्तेर्ह्यर्थग्रहणमर्थाकारतारूपो विकारः स्वप्नादौ सिद्ध एवास्ति । अतस्तद्दृष्टान्तेन पुरुषस्यापि वृत्तिग्रहणं वृत्त्याकारता वाच्या । सा च वृत्तिप्रतिबिम्बरूपा वृत्त्यनुकारितेति ॥ २० ॥**

अथ द्रष्टृपदार्थमाह—**द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ।** दृशिमात्रो ज्ञानमात्ररूपः । एतेन ज्ञानधर्मकत्वं निरस्तम् । स बुद्धेः प्रतिसंवेदी तदविभागापन्न इति यावत् । अविभाग एव च प्रतिबिम्ब इत्युच्यते । स च तया नात्यन्तमभिन्नः । कदाचिदेव तत्तद्विषयाकारताधारणेन तस्याः परिणामिनीत्वात् । संप्रज्ञानव्युत्थानयोः सदा ज्ञातविषयत्वेनापरिणामित्वात्पुरुषस्य । परिणामी तु न सदा ज्ञातविषयो यथा श्रोत्रादिः । किंच बुद्धिः परार्था क्लेशकर्मवासनाविषयेन्द्रियादिभिः सह पुरुषार्थकारित्वात्, शय्यादिवत् । पुरुषस्तु नैवमिति नात्यन्ताभेदः । नात्यन्तभिन्नो व्युत्थानदशायां यतः शुद्धोऽप्यपरिणाम्यपि प्रत्ययं बौद्धं प्रत्ययं वृत्तिजातमनुकुर्वन्निव

पश्यति विषयजातमित्यर्थः । तमनुकुर्वन्नतदात्मापि तदात्मक इव भाति । तदुक्तं—'प्राप्तचैतन्यामेदाया बुद्धिवृत्तेरनुकारणम् । तदविशिष्टः स आख्यायत इति भाष्ये । वृत्तेः स्वेनैव ग्रहणे कर्तृकर्मविरोधः, वृत्तिप्रवाहकल्पने चानवस्था तत्साक्षी तदविभागमापन्नः पुरुषः सिध्यति । वृत्तेरर्थग्रहणं ह्यर्थाकारतारूपो विकारः । तद्दृष्टान्तेन पुरुषस्यापि वृत्तिग्रहणं वृत्त्याकारतैव । सा चोक्तप्रतिबिम्बरूपा वृत्त्यनुकारितैवेति दिक् ॥ २० ॥

द्रष्टरि प्रमाणान्तरमाह—

## तदर्थ एव दृश्यस्यात्मा ॥ २१ ॥

तस्य द्रष्टुरर्थः प्रयोजनं भोगापवर्गावेव प्रयोजनं यस्य स तदर्थः । तथाच द्रष्टुर्भोगापवर्गप्रयोजनकमेव दृश्यस्यात्मा स्वरूपं कार्यकारणात्मकं गुणत्रयं न स्वार्थमित्यर्थः । तथा च—गुणाः परार्थाः, संहत्यकारित्वात्, शय्यादिवदित्यनुमानेन प्रकृत्यादिभ्योऽतिरिक्तस्य द्रष्टुः सिद्धिरिति भावः । संहत्यकारित्वं स्वकार्ये सहकारिसापेक्षत्वम् ॥ २१ ॥

अथ सयोगाङ्गदृश्यस्य द्रष्टृत्वमाह—**तदर्थ एव दृश्यस्यात्मा** । तस्य द्रष्टुरर्थः प्रयोजनं भोगापवर्गावेव प्रयोजन यस्य स तदर्थ । द्रष्टुर्भोगापवर्गफलकं दृश्यस्यात्मा स्वरूप कार्यकारणात्मकं गुणत्रयं न स्वार्थमित्यर्थ । यतो दृश्यमेव पुरुषस्य भोग्यम् । यतो रूपशब्दादयो विषया सुखदुःखात्मनयानुकूलयितार प्रतिकूलयितारश्च । अनुकूलनीयादिश्चेतन पुरुष एव । न स्वात्मा कर्तृकर्मविरोधात् । किं च यतो दृश्यस्वरूप यावत्पुरुषार्थमनुवर्तते तन्निवृत्तौ च निवर्ततेऽतो न स्वार्थम् । तदनेन गुणा परार्था संहत्यकारित्वाच्छय्यादिवदित्यनुमानं प्रकृत्याद्यतिरिक्तपुरुषे मानमपि दर्शितम् । संहत्यकारित्वं कार्ये सहकारिसापेक्षत्वम् ॥ २१ ॥

ननु पुरुषार्थमेव चेत्प्रकृत्यादिकं तर्हि पुरुषस्य मुक्तौ तत्सर्वं नश्येत्, स्थितिहेतोः पुरुषार्थस्याभावादिति । तत्राह—

## कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥

कृतार्थं समाप्तपुरुषार्थमेकं कञ्चिन्मुक्तरूपं प्रति गुणादिकं प्रयोजनाकरणाद्राज्ञो राज्यवन्नष्टमप्यर्थक्रियाकारित्वरूपसत्ताशून्यमपि सर्वथा न नष्टम् । कस्मात्कृतार्थेऽन्यपुरुषे च तस्य साधारणत्वादित्यर्थः । तथा च पुरुषान्तराणामर्थैः प्रकृत्यादिस्थितिरिति भावः ॥ २२ ॥

नन्वेवं पुरुषस्य भोगापवर्गसमाप्तौ निष्प्रयोजनत्वाद्विरतव्यापारं स्यात् । स्थितिहेतोः पुरुषस्यार्थस्याभावात् । नश्येतैव वा । एवंच संसारोच्छेदः स्यादत आह—**कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्** । कञ्चित्कृतार्थं समाप्तपुरुषार्थं प्रति गुणादिकं प्रयोजनाकरणात् नष्टमपि अर्थक्रियाकारित्वरूपसत्ताशून्य-

मपि न नष्टं तदन्योऽकृतार्थस्तत्साधारणत्वादित्यर्थः । एवं च पुरुषान्तराणामर्थे प्रकृत्यादिस्थितिः प्रवृत्तिश्चेति भावः । प्रधानस्यैकत्वं पुरुषस्यानेकत्वं च 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति श्रुतिराह । एकत्वश्रुतयश्च देशकालविभागाभावेन गौणाविभागरूपत्वपरा इति दिक् ॥ २२ ॥

अत्र सूत्रेषु पुरुषबहुत्वं सिद्धम् । द्रष्टृदृश्ये व्याख्याते तयोः कीदृशः संयोगो हेतुस्तदुच्यते ।

## स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ २३ ॥

**प्रलये भोग्यभोक्तृभावाभावाच्छक्तिग्रहणम् । स्वस्वामिशक्तिकयोर्भोग्यभोक्तृत्वयोग्ययोर्दृश्यद्रष्ट्रोः स्वरूपोपलब्धी विषयभोगात्मदर्शने तयोर्हेतुर्यः संयोगविशेषो जन्माख्यः स एव पूर्वसूत्रे द्रष्टृदृश्यसंयोगशब्दार्थः । द्रष्टृदृश्यसंयोगसामान्यस्य सार्वकालिकत्वेन हेयाहेतुत्वाद्वक्ष्यमाणज्ञाननिवर्त्यत्वासंभवाच्चेति भावः ॥ २३ ॥**

अथ तयोः संयोगमाह—**स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः** । प्रलये भोग्यभोक्तृत्वाभावाच्छक्तिग्रहणम् । स्वं भोग्यं, स्वामी भोक्ता । स्वरूपयोः दृश्यपुरुषस्वरूपयोः उपलब्धिर्विषयभोगात्मदर्शनरूपा तस्या हेतुर्यः स्वस्वबुद्धिजन्माख्यः स एव जातोऽहमित्यादिबुद्धिविषयत्वरूपः संयोग इत्यर्थः । संयोगसामान्यस्य सार्वकालिकत्वेन हेयाहेतुत्वाद्वक्ष्यमाणज्ञाननिवर्त्यत्वासंभवाच्चेति भावः । सम्यग्दर्शनाद्भोगकारणाविद्यानाशे भोगाभावरूपो बन्धाभाव एव मोक्षः । अत आत्मदर्शनमपि संयोगहेतुकमेवेति दिक् ॥ २३ ॥

**द्रष्टृदृश्यसंयोगस्यापि कारणं दर्शयति—**

## तस्य हेतुरविद्या ॥ २४ ॥

***तस्य जन्माख्यस्य द्रष्टृदृश्यसंयोगस्याविद्या मूलकारणमित्यर्थः । अविद्याशब्देना-*** **त्रानात्मन्यात्मबुद्धिरूपा मिथ्याज्ञानवासना ग्राह्या । तस्या एव जन्मप्राक्काले संभवाद्भाष्यकृतोक्तत्वाच्च ।**

तस्य संयोगस्य कारणमाह—**तस्य हेतुरविद्या** । तस्य जन्माख्यस्य द्रष्टृदृश्यसंयोगस्याविद्या मूलकारणमित्यर्थः । अविद्याशब्देनात्रानात्मन्यात्मबुद्धिरूपमिथ्याज्ञानवासना तस्या एव जन्मप्राक्काले संभवात् । सर्गान्तरीयाविद्यायाः स्वाश्रयचित्तेन सह प्रधाने निरुद्धायाः प्रधाने स्थिता या वासना तद्वासितं च प्रधानं पुनः सर्गादौ अविद्याविशिष्टमेव चित्तं तत्पुरुषसंयोगो (?) सृजति । एवं पूर्वपूर्वसर्गेष्वित्यनादितास्याः । अविद्यावासनासत्त्वादेव च प्रलये न मुक्तिः । यदा तु विवेकख्यातिर्धर्ममेघसमाधिरूपां निष्ठां प्राप्ता तदा दग्धबीजतुल्यसवासनचित्तनिवृत्त्या स्वरूपमात्रेण पुरुषस्थितिरूपो मोक्षः । हेयहेतुरूपं व्यूहद्वयं प्रतिपादितम् ॥ २४ ॥

तदेवं हेयहेतुरूपं व्यूहद्वयं प्रतिपादितं, हानव्यूह इदानीमुच्यते—

## तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम् ॥ २५ ॥

तस्याश्चाविद्याया अत्यन्तोच्छेदाज्जन्माख्यसंयोगात्यन्तनिवृत्तिर्हानं दुःखात्यन्तोच्छेदरूपो मोक्षः । कार्यकारणाभेदात्तदेव च दृशेः चैतन्यस्य कैवल्यमित्यप्युच्यते । तद्द्वितीयासङ्गरूपत्वादित्यर्थः ॥ २५ ॥

इदानी हानमाह—**तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम्**। तस्या अविद्याया अभावात्सवासनाया दाहात् जन्माख्यसंयोगस्यात्यन्तनिवृत्तिर्हानमात्यन्तिकदुःखोपरमरूपो मोक्षः । कार्यकारणाभेदात् । तदेव दृशेश्चैतन्यस्य कैवल्यमसंगतेत्यर्थः । ननु पुरुषस्य नित्यनिर्दुःखत्वात्कथं दुःखहानिः पुरुषार्थ इति चेन्न । भोग्यत्वरूपस्वत्वसंबन्धेनैव दुःखहानस्य पुरुषार्थत्वात् । यद्यपि भोगोऽपि साक्षात्काररूपो नित्य एव तथापि घटाकाशवदनित्यता । दुःखभोगस्य दुःखवृत्त्यविभागापन्नत्वेनावधृतचित्स्वरूपत्वादिति दिक् ॥ २५ ॥

इतः परं हानोपायव्यूहं चतुर्थस्यापि कियत्पर्यन्तं प्रपञ्चयते—

## विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥

मिथ्याज्ञानवासनयाऽन्तराभिभवो विप्लवस्तद्रहितो विवेकतः पुरुषसाक्षात्कारो मोक्षोपायः सवासनाविद्योन्मूलनद्वारेत्यर्थः । नन्वेवं ज्ञानादेव मोक्ष इति वचनादसंप्रज्ञातयोगवैफल्यमिति चेन्न । ज्ञानद्वारतया ज्ञानमध्य एवासंप्रज्ञातान्तर्भाव इत्याशयादिति ॥ २६ ॥

अथ हानोपायमाह—**विवेकख्यातिरविप्लवा हानोपायः** । मिथ्याज्ञानवासनयान्तराभिभवो विप्लवस्तद्रहिता विवेकख्यातिः प्रकृतिविवेकतः पुरुषसाक्षात्कारो मोक्षोपायः सवासनाविद्योन्मूलनद्वारेत्यर्थः । नन्वेवं ज्ञानादेव मोक्षश्रुतेरसंप्रज्ञातो निष्फल इति चेन्न, ज्ञानद्वारतया ज्ञानमध्ये तदन्तर्भाव इत्याशयात् ॥ २६ ॥

विवेकख्यातेरविप्लवाख्यनिष्ठाया लक्षणमाह—

## तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥

तस्य विवेकख्यातिरूपस्य हानोपायस्य प्रान्तभूमिकारूपिणी प्रज्ञा योगजसाक्षात्काररूपिणी सप्तप्रकारा भवति । तद्यथा हेयं दुःखं मया परिज्ञातमतः न मेऽत्र किमपि ज्ञातव्यमवशिष्यते इत्येका प्रज्ञा जायते । तथा विवेकख्यातिरूपो हानोपायो मया निष्पादितो नास्य निष्पाद्यमवशिष्यते । तत्फलानुभवादिति द्वितीया । तथा हेयहेतवोऽविद्याकामकर्मादयो ममाशेषतः क्षीणाः । न तेषां क्षेतव्यमवशिष्यत इति तृतीया । तथा दुःखहानरूपं मोक्षाख्यफलं तद्गोचरासंप्रज्ञातयोगेन साक्षात्कृतं न पुरुषार्थस्यापि ज्ञातव्यमवशिष्यत इति चतुर्थी प्रज्ञा । तदेतत्स्वस्य कृत्यसमाप्त्यनुभवरूपं प्रज्ञाचतुष्टयमुक्तम् । भावि विदेहकैवल्यकालीनावस्थानुभवरूपं चान्यत्प्रज्ञात्रयं यथा—समाप्तभोगापवर्गा मे बुद्धिर्भवि-

**ष्यतीत्येवमाकारा प्रथमा । तथाबुद्धिरूपेण परिणताः सत्वादयो गुणाः स्वकारणे लयमेष्यन्तीत्येवमाकारा द्वितीया । तथाप्रलीनानां तेषां न पुनर्बुद्धिरूपेण परिणामो भविष्यतीत्येवमाकारा तृतीयेत्येवं सप्तप्रकारोऽनुभवो यस्य विदुषो जायते तस्य ज्ञाननिष्ठा सद्योमुक्तिदा ज्ञातव्येत्यर्थः ॥ २७ ॥**

विवेकख्यातेरविप्लवाख्यनिष्ठाया. फलमाह—**तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ।** तस्य विवेकख्यातिरूपहानोपायस्य प्रान्तभूमिकारूपिणी प्रज्ञा योगजसाक्षात्काररूपिणी सप्तप्रकारा भवति । तद्यथा हेयं दु.खं मया परिज्ञातं न मे ज्ञातव्यमवशिष्यत इत्येका प्रज्ञा । विवेकख्यातिरूपो हानोपायो निष्पादितो न निष्पाद्यमवशिष्यते तत्फलानुभवादिति द्वितीया । हेयहेतवोऽविद्याकामकर्मादयोऽशेषतः क्षीणा न किंचित्क्षेतव्यमवशिष्यत इति तृतीया । तथा दु खहानरूपमोक्षाख्यफलं तद्गोचरासंप्रज्ञातयोगेन साक्षात्कृतं न पुरुषार्थस्यापि ज्ञातव्यमवशिष्यत इति चतुर्थी । तदेतत्स्वस्य कृत्यसमाप्त्यनुभवरूपं प्रज्ञाचतुष्टयं प्रयत्नसाध्यतया कार्या विमुक्तिरित्युच्यते । विदेहकैवल्यकालिकावस्थानुभवरूपं चान्यत्प्रज्ञात्रयं यथा—समाप्तभोगापवर्गा मे बुद्धिर्भविष्यतीति प्रथमा, बुद्धिरूपेण परिणता· सत्वादय· स्वकारणे लयमेष्यन्तीति द्वितीया, लयं गच्छन्तीति वा द्वितीया, प्रलीनाना च तेषां बुद्धिरूपः परिणामो न भविष्यतीति तृतीया । एवं सप्तप्रकारानुभववतो ज्ञाननिष्ठा सद्योमुक्तिदेत्यवगन्तव्यम् । एवमुत्तमस्य केवलं ज्ञानमेव साधनं यथा सनकादीनां, मध्यमस्य ज्ञानकर्मणी समुच्चिते यथा हिरण्यगर्भादीनामिति विष्णुपुराणादौ स्पष्टम् ॥ २७ ॥

**अतः परं विवेकख्यात्युपायप्रतिपादकं सूत्रजातं प्रवर्तते—**

## योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥ २८ ॥

**योगाङ्गान्यष्टौ वक्ष्यमाणानि तेषामनुष्ठानात्पापक्षये सति ज्ञानस्य पृथिव्यादितत्वविषयकस्य दीप्तिर्वृद्धिर्भवति, प्रकृतिपुरुषविवेकसाक्षात्कारं यावदित्यर्थः ॥ २८ ॥**

अथारुरुक्षोर्मन्दाधिकारिणो धारणादिरूपोऽभ्यासो यमनियमादिरूपक्रियायोगश्च यथाक्रममनुष्ठेयत्वेष्टेनोपदिशन् आदौ यमाद्यनुष्ठानमिति दर्शयन् विवेकख्यात्युपायं दर्शयन्नाह—**योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ।** योगाङ्गान्यष्टौ वक्ष्यमाणानि तेषामनुष्ठानात्पापक्षये सति ज्ञानस्य पृथिव्यादितत्वविषयकस्य दीप्ति· वृद्धि प्रकृतिपुरुषविवेकसाक्षात्कारपर्यन्ता भवतीत्यर्थ· ॥ २८ ॥

**कानि तानि योगाङ्गानीत्यपेक्षायामाह—**

## यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ॥ २९ ॥

**सुगमम् ॥ २९ ॥**

तत्र योगाङ्गान्याह—**यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टौ योगाङ्गानि ।** एतानि ज्ञानस्येव योगस्यापि साधनतया योगाङ्गानि ॥ २९ ॥

**एतानि च ज्ञानस्येव योगस्यापि साधनतया योगाङ्गानीति यमादीन्सूत्रैः क्रमेण लक्षयति—**

## तत्राहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ॥ ३० ॥

**तत्र तेषु यमादिषु मध्येऽहिंसादयः पञ्च यमा इत्यर्थः । तत्र अहिंसा प्राणिनामद्रोहः । सत्यं वाङ्मनसयोर्यथार्थता । अस्तेयं परस्वानादानम् । ब्रह्मचर्यमष्टविधमैथुननिवृत्तिः । "स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः" इत्यष्टविधमैथुनस्य लक्षणमुक्तम् । अपरिग्रहश्च हिंसाद्यसंख्यदोषदर्शनतः पदार्थानामस्वीकार इति ॥ ३० ॥**

तत्र यमं लक्षयति—**अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ।** तत्राहिंसा प्राणिनामद्रोहः । शौचाचमनादावपरिहार्यहिंसाया तु न दोषः । सत्यं वाङ्मनसयोर्यथार्थता । अस्तेयं परस्वानादानम् । ब्रह्मचर्यमष्टविधमैथुनत्यागः । 'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव चे'त्यष्टविधम् । अपरिग्रहश्च हिंसाद्यसंख्यदोषदर्शनात्पदार्थानामस्वीकरणम् ॥ ३० ॥

**यमेष्ववान्तरविशेषनिमित्तमुत्कर्षमाह—**

## जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ ३१ ॥

जातिः **मनुष्यब्राह्मणादिः** । देशस्तीर्थादिः । कालश्चतुर्दश्यादिः । **समयो युद्धादिः । एतैरनवच्छिन्नाः मनुष्यान्न हनिष्ये, तीर्थे न हनिष्ये, चतुर्दश्यां न हनिष्ये, युद्धातिरिक्ते न हनिष्ये इत्यादिविशेषैरनियमिता अत एव सार्वभौमाः सर्वजात्यादिसाधारणास्तेऽहिंसादयो यमा महाव्रता इत्युच्यन्ते । अन्वर्था चेयं संज्ञा ॥ ३१ ॥**

यमानामुत्कर्षमाह—**जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ।** जातिर्मनुष्यत्वादिः, देशस्तीर्थादिः, कालश्चतुर्दश्यादिः, समयो युद्धादिः, एतैरनवच्छिन्नाः मनुष्यान् न हनिष्ये तीर्थे न हनिष्ये चतुर्दश्यां न हनिष्ये युद्धातिरिक्ते न हनिष्ये इत्येवंविशेषैरनियमिता अतएव सार्वभौमाः सर्वविषयेषु विदिताः सर्वजातिदेशकालादिसाधारणास्तेऽहिंसादयो महाव्रतमित्युच्यन्ते । अन्वर्था चेयं संज्ञा ॥ ३१ ॥

यमान्व्याख्याय नियमान्व्याचष्टे—

## शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ ३२ ॥

**शौचं मृज्जलादिना बाह्यं, पञ्चगव्यादिभोजनेन चाभ्यन्तरम् । एतदुभयं शारीरम् । मानसं तु रागद्वेषादिमलक्षालनम् । संतोषः संनिहितोपकरणादधिकानुपादित्सा । तपश्चान्द्रायणादि । स्वाध्यायो मोक्षशास्त्राध्ययनं प्रणवजपो वा । ईश्वरप्रणिधानं परमगुरौ परमेश्वरे सर्वकर्मार्पणम् । एतानि नियमा इत्यर्थः । अर्पणं चोक्तं कौर्मे—"नाहं कर्ता सर्वमेतद्ब्रह्मैव कुरुते तथा । एतद्ब्रह्मार्पणं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः" इत्यादि ॥ ३२ ॥**

नियमानाह—**शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ।** शौचं मृज्जलादिना बाह्यं पञ्चगव्यादिभोजनेन च । आभ्यन्तरं रागद्वेषादिमलक्षालनम् । संतोषः संनिहितोपकरणादधिकस्यानुपादित्सा । तपश्चान्द्रायणादि, क्षुत्तृषे शीतोष्णे स्थानासनरूपद्वन्द्वसहनं, इङ्गितेनापि स्वाभिप्रायाप्रकाशनरूपकाष्ठमौनमवचनरूपाकारमौनादि । स्वाध्यायो मोक्षशास्त्राध्ययनम् । ईश्वरप्रणिधानं परमेश्वरे सर्वकर्मार्पणं तत्पूजनादि च ॥ ३२ ॥

उक्तेषु यमनियमेषु विघ्ननिवृत्त्युपायमाह—

## वितर्कबाधने प्रतिपक्षभावनम् ॥ ३३ ॥

**वक्ष्यमाणवितर्कैर्यमादिबाधने क्रियमाणे वक्ष्यमाणं प्रतिपक्षभावनं कार्यमित्यर्थः ॥ ३३ ॥**

एतेषु यमनियमेष्वभ्यस्यमानेषु प्राप्तविघ्नाना निवृत्त्युपायमाह—**वितर्कबाधने प्रतिपक्षभावनम् ।** वक्ष्यमाणैर्वितर्कैर्यमादीना बाधने क्रियमाणे वक्ष्यमाणप्रतिपक्षभावनं कार्यमित्यर्थः ॥ ३३ ॥

ये ते वितर्का यच्च तेषां प्रतिपक्षचिन्तनं तद्द्वयमाह—

## वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥ ३४ ॥

**यमनियमविपरीता हिंसादयो दश वितर्कशब्देन तन्त्रे परिभाषिताः । ते च कृता वा कारिता वा साधुसाध्वित्यनुमोदिता वा स्युः । तथा लोभोत्थाः क्रोधोत्था मोहोत्था वा स्युः । तथा मृदवो मध्या अतिप्रमाणा वा स्युः । सर्व एव दुःखाज्ञानानन्तफला इत्येवं वितर्कप्रतिपक्षरूपदुःखज्ञानानन्तफलत्वस्य चिन्तनं कुर्यादित्यर्थः । दुःखं चाज्ञानं च ते एवानन्ते फले येषामिति विग्रहः ॥ ३४ ॥**

तदेवाह—**वितर्का हिंसादयः कृतकारितानुमोदितालोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम्**। अहिंसादिविपरीता हिंसादयो दश वितर्का इति परिभाषितास्ते स्वयं कृतान्येन कारिता साधुसाध्वित्यनुमोदिता इति त्रिविधास्ते पुनर्लोभक्रोधमोहपूर्वकत्वेन त्रिविधा लोभादयः पुनस्त्रिविधा मृदवो मध्या अतिप्रमाणा इति सर्व एते दुःखं विपर्ययज्ञानरूपमज्ञानं च संसारमूलकारणं फलं येषां ते इति प्रतिपक्षभावनया तेषां परिहारः कार्य इत्यर्थः ॥ ३४ ॥

यमनियमनिष्पत्तिसूचकानां सिद्धीनां सूत्राण्यतः परं प्रवर्तन्ते—

## अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्यागः ॥ ३५ ॥

अहिंसास्थैर्ये सति तत्संनिधिस्थानां मार्जारमूषकादीनामन्योन्यवैरत्यागो भवति ॥ ३५ ॥

अथ यमादिनिष्पत्तिसूचिकाः सिद्धीराह—**अहिंसाप्रतिष्ठायां वैरत्यागः**। अहिंसास्थैर्ये सति तत्संनिधिस्थानां मार्जारमूषकादीनामप्यन्योन्यं वैरत्याग इत्यर्थः ॥ ३५ ॥

## सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥ ३६ ॥

सत्यस्थैर्ये सति तद्वचनमात्रेणान्येषां धर्मादिक्रियावत्त्वम्। तत्फलसर्गादिमत्त्वं च भवति ॥ ३६ ॥

**सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्** ॥ ३६ ॥

## अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ ३७ ॥

अस्तेयस्थैर्ये तस्मै स्वयमेव सर्वं रत्नान्युपतिष्ठन्ते ॥ ३७ ॥

अस्तेयस्थैर्ये तद्वचनमात्रेण सर्वदिग्भ्य सर्वरत्नान्युपतिष्ठन्ते ॥ ३७ ॥

## ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ॥ ३८ ॥

ब्रह्मचर्यस्थैर्ये सति वीर्यलाभः सामर्थ्यविशेषो भवति। येन स्वयं ज्ञानक्रियाशक्तिमान्भूत्वा परेषु पुरुषः क्षमत इत्यर्थः ॥ ३८ ॥

**ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः**। स्वयंज्ञानक्रियाशक्तिरूपसामर्थ्यवान् भूत्वाऽन्येषामपि तदादधाति ॥ ३८ ॥

## अपरिग्रहस्थैर्ये जन्मकथन्तासंबोधः ॥ ३९ ॥

अपूर्वेण देहेन्द्रियादिसंघातेन ज्ञानहेतुः संयोगो जन्म, तस्य कथन्ता च किंप्रकारता तयोः संबोधः साक्षात्कारो जातिस्मरणं भवति ॥ ३९ ॥

**अपरिग्रहस्थैर्ये जन्मकथन्तासंबोधः**। पूर्वापरजातिस्मरो भवतीत्यर्थः ॥ ३९ ॥

यमसिद्धय उक्ताः । नियमसिद्धय उच्यन्ते—

**शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः ॥ ४० ॥**

शौचस्थैर्यात्स्वाङ्गे जुगुप्सा कुत्साऽशुचिदोषदर्शनरूपा भवति । अतएव परैर-संसर्गोऽपि भवति ॥ ४० ॥

नियमसिद्धीराह—**शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः** । स्वाङ्गे जुगुप्सा मृज्जलादिभिः शोधयतोऽपि कायशुद्ध्यदर्शनात् । अतएव परकायेष्वपि तादृशत्वदर्शी तैरसंसृष्टो भवति ॥ ४० ॥

बहिःशौचस्थैर्यसिद्धिमुक्त्वाऽन्तःशौचसिद्धिमाह—

**सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्य-त्वानि च ॥ ४१ ॥**

चित्तमलक्षालनरूपाच्छौचात्सत्वशुद्धिः सत्वोद्रेकः । ततः सौमनस्यं स्वाभा-विकी प्रीतिः । ततः प्रीतचित्तस्याविक्षेपादैकाग्र्यम् । तत इन्द्रियजयस्ततश्चात्म-साक्षात्कारयोग्यत्वमित्यर्थः ॥ ४१ ॥

अन्त शौचसिद्धिमाह—**सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शन-योग्यत्वानि च** । भवन्तीति शेष । चित्तमलक्षालनरूपाच्छौचात्सत्वशुद्धिः सत्वगुणोद्रेकस्तत सौमनस्यं सर्वत्र प्रीति , तत. प्रीतचित्तस्याविक्षेपादैकाग्र्यं, तत इन्द्रियजयस्तत आत्मसाक्षात्कारयोग्यता ॥ ४१ ॥

**संतोषादनुत्तमसुखलाभः ॥ ४२ ॥**

संतोषस्य तृष्णाक्षयस्य स्थैर्यादनुत्तमस्य विषयसुखापेक्षया प्रकृष्टस्य सुखस्य लाभो भवति ॥ ४२ ॥

**संतोषादनुत्तमसुखलाभः** । सुषुमाविवेत्यर्थ· ॥ ४२ ॥

**कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥**

तपःस्थैर्यात्कायेन्द्रिययोः सिद्धिरशुद्धिक्षयद्वारा भवति । अशुद्धिः पापं तमो-गुणाश्च । कायसिद्धिरणिमाद्या इन्द्रियसिद्धिः दूराच्छ्रवणाद्या । एतानि भूतिपादे व्याख्यास्यन्ते ॥ ४३ ॥

**कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः** । तप.स्थैर्ये पापतमोगुणरूपाशुद्धि-क्षयात्कार्यसिद्धिरणिमादिरूपा इन्द्रियसिद्धिर्दूराच्छ्रवणाद्या भवन्तीत्यर्थ. ॥ ४३ ॥

**स्वाध्यायादिष्टदेवतासंप्रयोगः ॥ ४४ ॥**

स्वाध्यायस्थैर्यादिष्टदेवतानां संप्रयोगो दर्शनं भवति ॥ ४४ ॥

## समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥

ईश्वरप्रणिधानस्थैर्यात्समाधिसिद्धिर्योगनिष्पत्तिर्भवतीत्यर्थः ॥ ४५ ॥

**समाधिसिद्धिरीश्वरप्रणिधानात्** । समाधिसिद्धिर्योगसिद्धिः इतरकारणेभ्योऽस्यान्तरङ्गत्वं सूचयति ॥ ४५ ॥

यमनियमाः सिद्धिभि सहोक्ताः । आसनमुच्यते—

## स्थिरसुखमासनम् ॥ ४६ ॥

आस्यतेऽनेन प्रकारेणेति व्युत्पत्तेरित्यर्थः । आसनगतविशेषाश्च हठयोगग्रन्थेभ्यो ज्ञेयाः । गुरुभिश्च वार्तिकेऽपि कियन्तः प्रदर्शिताः ॥ ४६ ॥

आसनमाह—**स्थिरसुखमासनम्** । यदेव स्थिरं सुखकरं च तदेवासनं कार्यमित्यर्थः ॥ ४६ ॥

आसनस्थैर्यस्योपायमाह—

## प्रयत्नशैथिल्याऽनन्तसमापत्तिभ्याम् ॥४७॥

प्रयत्नशैथिल्यं बहुलायासनिवृत्तिः । अनन्तसमापत्तिश्च पृथिवीधारिणि स्थिरतरे शेषनागे चित्तस्य धारणं ताभ्यामासनं निष्पद्यते इत्यर्थः ॥ ४७ ॥

तत्स्थैर्योपायमाह—**प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्** । प्रयत्नशैथिल्यं बहुलायासनिवृत्ति अनन्ते पृथ्वीधारिणि शेषे समापत्तिश्चित्तस्य धारणा ताभ्यामासनं सिध्यतीत्यर्थं ॥ ४७ ॥

आसनादपि सिद्धिमाह—

## ततो द्वन्द्वानभिघातः ॥ ४८ ॥

तत आसनस्थैर्याद्द्वन्द्वैः शीतोष्णादिभिरनभिघातश्चित्तालम्बनं भवतीत्यर्थः ॥ ४८ ॥

आसनसिद्धे फलमाह—**ततो द्वन्द्वानभिघातः** । तत आसनस्थैर्यात् । द्वन्द्वं शीतोष्णादि ॥ ४८ ॥

क्रमप्राप्तं प्राणायामं लक्षयति—

## तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९ ॥

तस्मिन्नासने सति श्वासप्रश्वासयोः शास्त्रोक्तरीत्या स्वाभाविकगतिविच्छेदः प्राणायाम इति । वक्ष्यमाणचतुर्विधप्राणायामस्य सामान्यलक्षणम् । तत्रासनस्याङ्गत्वलाभाय सत्यन्तम् । श्वासप्रश्वासौ नासापुटेन वायोः प्रवेशनिर्गमौ लोकप्रसिद्धौ तत्काले या स्वाभाविकी गतिस्तत्प्रतिषेध इत्यर्थः । अतो न श्वासप्रश्वासयोर्गत्यनुपपत्तिदोषः ॥ ४९ ॥

अथ प्राणायाममाह—**तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः**। तस्मिन्नासने सति नासापुटेन स्वाभाविकौ यौ वायोः प्रवेशनिर्गमौ तत्काले या गतिस्तद्विच्छेद इत्यर्थः ॥ ४९ ॥

प्राणायामस्यावान्तरभेदानाह—

**बाह्यान्तरस्तम्भवृत्तिर्देशकालसंख्यावृत्तिभिः परिदृष्टो दीर्घसूक्ष्मः ॥ ५० ॥**

स च प्राणायामो बाह्यवृत्तिराभ्यन्तरवृत्तिस्तम्भवृत्तिरिति त्रिविधः। रेचकपूरककुम्भकभेदात् सोऽपि त्रिविधः। प्राणायामो यदा देशकालसंख्याभिः परिदृष्टो निर्णीतो नियमितो भवति तदाऽभ्यासवशात्क्रमेण दीर्घसूक्ष्मसंज्ञको भवतीति वाक्यार्थः। एतावद्देशेन वा एतावत्कालेन वा एतावन्मात्रासंख्याभिर्वा परिच्छिन्नो मया रेचकादिः कर्तव्यः इत्येवमवधारित इति परिदृष्टान्तविशेषणार्थः। तत्र नासाग्रात्प्रादेशद्वादशाङ्गुलहस्तादिपरिमितो बाह्यदेशो रेचकस्य विषयः। शक्त्यनुसारात्। स च इषीकातूलक्रियया निश्चेयः। कुम्भकस्य च पूरकदेश एव विषयः। त्रयाणां सहानुष्ठाने पूरकानन्तरमेव कुम्भकस्मरणात्। स तु तूलक्रिययोक्तस्य स्पर्शस्य वानुपलब्ध्या निश्चेय इति क्षणानामियत्तया अवच्छिन्नस्तु रेचकादिः कालदृष्ट उच्यते। संख्यापरिदृष्टश्च यथा—'निमेषोन्मेषणे मात्रा कालो लघ्वक्षरं तथा। प्राणायामस्य संज्ञार्थं स्मृतौ द्वादशमात्रिकः' इति। मार्कण्डेयाद्युक्तमात्राप्रमाणं ताभिर्द्वादशादिभिर्मात्रासंख्याभिः परिच्छिन्नो रेचकादिरिति। दीर्घसूक्ष्म इति चान्वर्था संज्ञा दीर्घश्चासौ सूक्ष्मश्चेति व्युत्पत्तेः। देशाद्यन्यतमनियमेन हि प्रत्यहमभ्यस्यमानः क्रमेण कालवृद्ध्या दीर्घकालव्यापित्वेन दीर्घ उच्यते, वायुसंचारस्यातिसूक्ष्मतया सूक्ष्म इति ॥ ५० ॥

तस्यावान्तरभेदानाह—**बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः**। स प्राणायामो बाह्यवृत्तिराभ्यन्तरवृत्तिस्तम्भवृत्तिरिति त्रिधा। रेचकपूरककुम्भकभेदात्। प्राणिनां दक्षिणा नाडी पिङ्गला नाम सूर्यदैवत्या पितृयोनिः। वामा इडाख्या चन्द्रदैवत्या देवयोनि·। तयोर्मध्ये सुषुम्ना ब्रह्मदैवत्या, तत्र वामनासापुटेनान्तर्वायोस्त्यागो रेचकः। दक्षिणेन बाह्यपूरणं पूरकः। पूरितस्य निगृह्याविमोक· कुम्भकः। याज्ञवल्क्येन पूरककुम्भकरेचक इति क्रम उक्त·। स त्रिविधो देशकालसंख्याभिः परिदृष्टो निर्णीतो। भवति तदभ्यासवशाद्दीर्घसूक्ष्मसंज्ञको भवतीत्यर्थः। तत्र रेचकस्य देशो नासिकाद्बहि प्रादेश· द्वादशाङ्गुलहस्तादिपरिमितः शक्त्यनुसारात्। स चेषीकातूलादिक्रियया निश्चेय·। पूरकस्य चापादतलमस्तकमाभ्यन्तरो देशः स च पिपीलिकास्पर्शसदृशस्पर्शेन निश्चेयः। कुम्भकस्य च पूरकदेश एव विषयः। पूरकानन्तरं तच्छ्रवणात्। स तूलक्रियया उक्तस्पर्शस्य वानुपलब्ध्या निश्चेय·। कालावधृतो यथा। एतावत्काले रेचक एतावत्क्षणव्यापी पूरक एतावत्कालव्यापी कुम्भक इत्यङ्गीकृतकालैरवधृतः। द्वादशरूपमा-

त्रासंख्यायाः एकैव संख्या त्रिष्वपि मार्कण्डेयोक्ता। मात्रा निमेषोन्मेषपरिच्छिन्नः कालः स्वजानुमण्डलं त्रिः परामृश्य छोटिकावच्छिन्नकालो मात्रेत्यन्ये। निमेषक्रियावच्छिन्नकालस्य चतुर्थो भावः क्षण इति च। उक्तछोटिकावच्छिन्नः काल एव श्वासप्रश्वासक्रियावच्छिन्नः काल इति च। वसिष्ठेन पूरके षोडश मात्राः कुम्भके चतुःषष्टिमात्राः रेचके द्वात्रिंशन्मात्रा उक्ताः। योगियाज्ञवल्क्येन त्रिष्वपि द्वादशमात्रः कनीयान्, त्रिष्वपि चतुर्विंशतिमात्रो मध्यमः, त्रिष्वपि षट्त्रिंशन्मात्राकालपरिच्छिन्न उत्तम इत्युक्तम्। दीर्घसूक्ष्म इति देशाद्यन्यतमनियमेन प्रत्यहमभ्यस्यमानः क्रमेण कालवृद्ध्या दीर्घकालव्याप्तित्वाद्दीर्घः, वायुसंचारस्यातिसूक्ष्मतया सूक्ष्मश्च भवतीति बोध्यम्। स च जपध्यानं विना क्रियमाणोऽगर्भ इत्युच्यते। तत्सहितश्च सगर्भ इति। तत्रेश्वरगीताया सव्याहृतिका सप्रणवा गायत्री सशिरस्का त्रिर्जप्या इत्युक्तम् त्रिषु एकैकवारमित्यर्थः॥ प्रणवो जप्य इत्यन्यत्र। तत्र पूरकादिक्रमेण नाभिहृदयललाटेषु ब्रह्मविष्णुशिवानां ध्यानमुक्तं क्वचित्। क्वचित् परब्रह्मण एव॥ ५०॥

केवलकुम्भकरूपं प्राणायामस्य चतुर्थं विशेषमाह—

**बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः॥ ५१॥**

बाह्याभ्यन्तरविषयकौ बाह्याभ्यन्तरवृत्ती पूर्वसूत्रोक्तौ रेचकपूरकौ तयोराक्षेपी अतिक्रमी तावतिक्रम्य स्वयमेव केवलो जायत इति यावत्। स पूर्वसूत्रोक्तरेचकपूरकादित्रयापेक्षया चतुर्थः। प्राणायाम इत्यर्थः। तदुक्तं वासिष्ठसंहितायाम्—'प्रस्वेदं जनयेद्यस्तु प्राणायामो हि सोऽधमः। मध्यमः कम्पनात्प्रोक्त उत्थाने चोत्तमो भवेत्॥ पूर्वं पूर्वं प्रकुर्वीत यावदुत्तमसंभवः। निश्वासोच्छ्वासकौ देहे स्वाभाविकगुणावुभौ॥ तथापि नश्यतस्तेन प्राणायामोत्तमेन हि। तयोर्नाशसमर्थः स्यात्कर्तुं केवलकुम्भकम्॥ रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम्। प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः॥ सहितं केवलं वापि कुम्भकं नित्यमभ्यसेत्। यावत्केवलसिद्धिः स्यात्तावत्सहितमभ्यसेत्॥ केवले कुम्भके सिद्धे रेचकपूरकवर्जिते। न तस्य दुर्लभं किंचित्त्रिषु लोकेषु विद्यते' इति॥ ५१॥

अथ केवलकुम्भकरूपं चतुर्थं भेदमाह—**बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः**। बाह्याभ्यन्तरविषयौ उक्तौ रेचकपूरकौ तयोराक्षेपी तावतिक्रम्य जायमानः केवलकुम्भकरूपश्चतुर्थ इत्यर्थः। तदुक्तं वासिष्ठसंहितायां—'प्रस्वेदं जनयेद्यस्तु प्राणायामो हि सोऽधमः। मध्यमः कम्पकः प्रोक्त उत्थाने चोत्तमो भवेत्॥ पूर्वपूर्वं प्रकुर्वीत यावदुत्तरसंभवः। निश्वासोच्छ्वासकौ देहे स्वाभाविकगुणावुभौ॥ तथापि नश्यतस्तेन प्राणायामोत्तमेन तौ। तयोर्नाशे समर्थः स्यात् कर्तुं केवलकुम्भकम्॥ रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम्। प्राणायामोऽयमित्युक्तः स च केवलकुम्भकः। सहितं केवलं वापि कुम्भकं नित्यमभ्य-

सेत् । तपो न परं प्राणायामात्, ततो विशुद्धिर्मलादीनां दीप्तिश्च ज्ञानस्येति भाष्यम् ॥ ५१ ॥

योगद्वारभूतां प्राणायामस्य स्थितिसिद्धिमाह द्वाभ्याम्—

## ततः क्षीयते प्रकाशावरणम् ॥ ५२ ॥

ततः प्राणायामस्थैर्यात्प्रकाशस्य विवेकज्ञानस्यावारकं कर्मादृष्टरूपं क्षीयत इत्यर्थः ॥ ५२ ॥

तदेवाह—**ततः क्षीयते प्रकाशावरणम्** । विवेकज्ञानावारकं कर्म प्राणायामस्थैर्यात् क्षीयत इत्यर्थः ॥ ५२ ॥

## धारणासु च योग्यता मनसः ॥ ५३ ॥

प्राणायामस्थैर्यादेव मनसो वक्ष्यमाणधारणासु क्षमता भवति । प्राणाधीनतया मनोव्यापारस्य प्राणस्थैर्येणैव मनःस्थैर्यादित्यर्थः । अतएव वासिष्ठादौ मनःक्षोभेण प्राणक्षोभवत् प्राणक्षोभेणापि मनःक्षोभ उक्तः ॥ ५३ ॥

फलान्तरमाह—**धारणासु च योग्यता मनसः** । प्रणायामस्थैर्यादेव मनसो वक्ष्यमाणासु धारणासु क्षमता भवति । प्राणाधीनत्वान्मनोव्यापारस्य प्राणस्थैर्येणैव मनःस्थैर्यादित्यर्थः । अतएव वासिष्ठादौ मनःप्राणयोः परस्परक्षोभकतोक्ता ॥ ५३ ॥

क्रमागतं प्रत्याहारं लक्षयति—

## स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥ ५४ ॥

इन्द्रियाणां स्वस्वविषयासंनिकर्षकाले ध्यानादौ या चित्ताकारता भवति सा प्रत्याहार इति फलद्वारकं लक्षणम् । अजितेन्द्रियाणां तु ध्यानादिकाले चित्तमेवेन्द्रियानुकारि भवति । तदानीमपि रूपादिष्विन्द्रियैश्चित्ताकर्षणादिति ॥ ५४ ॥

प्रत्याहारमाह—**स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः** । इन्द्रियाणां स्वस्वविषयासंनिकर्षकाले ध्यानादौ या चित्ताकाराकारतेव स प्रत्याहार इति फलद्वारकं लक्षणम् । प्राणायामादिभिः स्थिरं चित्तं शब्दादिभिर्विषयैर्न संप्रयुज्यते । तदसंप्रयोगाच्चक्षुरादीन्यपि न संप्रयुज्यन्त इत्ययमिन्द्रियाणां चित्तस्वरूपानुकारः । ननु यत्तत्त्वे चित्तमभिनिवेश्यते तत्रेन्द्रियाणामनुकारस्तस्य तदविषयत्वादेतदर्थमिवेत्युक्तम् । एवं च संचितेन्द्रियाणां निरोधः प्रत्याहार इति फलितम् । अजितेन्द्रियाणां तु ध्यानादिकाले चित्तमेवेन्द्रियानुकारि तदानीमपि रूपादिष्विन्द्रियैश्चित्ताकर्षणादिति दिक् ॥ ५४ ॥

योगे व्यापारभूतामेव प्रत्याहारस्य सिद्धिमाह—

**ततः परमा वश्यतेन्द्रियाणाम् ॥ ५५ ॥**

ततः प्रत्याहारादिन्द्रियाणां परमो जयो भवति । चित्तास्वातन्त्र्येण वृत्त्यभाव एव परमजय इति ॥ ५५ ॥

**इति श्रीभावागणेशभट्टकृतायां योगदीपिकायां पातञ्जलसूत्रवृत्तौ साधनपादो द्वितीयः ॥ २ ॥**

---

तत्सिद्धि दर्शयति—**ततः परमा वश्यतेन्द्रियाणाम्** । ततः प्रत्याहारात् इन्द्रियाणां परमजयो भवति । चित्तैकाग्र्यात् स्वस्वविषयकवृत्त्यजनकत्वं भवतीत्यर्थः । विषयाभिमुखं नीयमानान्यपि न यान्तीति भावः । यथा तत्तदिन्द्रियनिरोधे पुनरिन्द्रियान्तरजयाय यत्नान्तरमपेक्षितं नैवं चित्तजयोत्तरमपि, तज्जयेनैव सर्वेषां जयादिति शिवम् ॥ ५५ ॥

**इति श्रीनागोजीभट्टीयायां पातञ्जलसूत्रवृत्तौ द्वितीयः पादः ॥ २ ॥**

---

# तृतीयो विभूतिपादः ।

योगस्य बहिरङ्गान्येव पञ्च पूर्वपादे व्याख्यातानि । अन्तरङ्गत्रयं तु सिद्धिभिः सहातिबहुलतया पृथक्पादेन व्याख्यायते—

## देशबन्धश्चित्तस्य धारणा ॥ १ ॥

**यत्र हृत्पुण्डरीकादिरूपे देशे ध्येयं चिन्तनीयं तत्र देशे चित्तस्य बन्ध ऐकाग्र्यं धारणेत्यर्थः ॥ १ ॥**

सोऽयं योगो यमनियमाभ्यां प्राप्तबीजो भवति । आसनप्राणायामाभ्यामङ्कुरित. प्रत्याहारेण कुसुमित इत्येतत्पञ्चकं बहिरङ्गम् । धारणादित्रयेण च फलतीति तदन्तरङ्गसाधनम् । तत्र धारणामाह—**देशबन्धश्चित्तस्य धारणा** । यत्र हृत्पुण्डरीकादिदेशे ध्येयं चिन्तनीयं तत्र देशे चित्तस्य बन्ध एकाग्रत्वं धारणेत्यर्थ । 'हृत्पुण्डरीके नाभ्या वा मूर्ध्नि पर्वतमस्तके। एवमादिप्रदेशेषु धारणा चित्तबन्धनम्' इत्युक्तेः । एवं नासाग्रजिह्वाग्रताल्वादयोऽपि । ननु मूर्त्यादिध्यानदेशो घटतां, सत्पुरुषान्यतायोगे शुद्धब्रह्मयोगे वा न देश संभवति, ध्येयस्यापरिच्छिन्नत्वादिति चेन्न । स्वस्वोपाधिदेशस्यैव तद्देशत्वादित्याह । मूर्त्यादिध्यानेन चित्तस्यैकाग्र्ये एव तद्ध्यानमिति तदुपायतयैषा धारणोक्तेत्यन्ये । तत्र धारणा द्वादशप्राणायामकालपरिच्छिन्नेति ईश्वरगीतायम् ॥ १ ॥

**क्रमागतं ध्यानं लक्षयति—**

## तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥

**तत्र देशे चतुर्भुजादिध्येयाकारवृत्तिप्रवाहो ध्यानमित्यर्थः ॥ २ ॥**

ध्यानमाह—**तत्र प्रत्ययैकतानता ध्यानम्** । तत्र देशे चतुर्भुजादिध्येयाकारवृत्तिप्रवाहो वृत्त्यन्तराव्यवहितो ध्यानमित्यर्थ । बुद्धिवृत्तौ वा तद्विवेकतश्चैतन्यचिन्तनम् । कारणोपाधावीश्वरचिन्तनमिति । द्वादशधारणाकालं च ध्यानम् ॥ २ ॥

**समाधिं लक्षयति—**

## तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३ ॥

**मात्रपदस्य विवरणं स्वरूपशून्यमिवेति । स्वरूपपदं च तदादीनामन्येषामप्युपलक्षणम् । इवशब्देन चाग्रहणमात्रं शून्यसाधर्म्यं विवक्षितम् । स्वरूपतो ध्यानस्य सत्त्वात् । तथा च तदेव ध्यानं तदा ध्येयार्थमात्रग्राहि भवति न तु ध्यातृध्यानध्येयादिविभागं गृह्णाति तदा समाधिरुच्यत इत्यर्थः । तद्विभागग्रहणकाले च ध्यानमिति ध्यानसमाध्योर्भेदः ॥ ३ ॥**

समाधिमाह—**तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ।** मात्रपदविवरणं च स्वरूपशून्यमिवेति । स्वरूपेति ध्यात्रादीनामप्युपलक्षणम्, इवशब्देनाग्रहणरूपं शून्यसाधर्म्यं विवक्षितम् । स्वरूपतो ध्यानसत्त्वात् । तथाच तदेव ध्यानं यदा ध्येयावेशवशात् ध्यानध्यातृदृष्टिशून्यं ध्येयमात्राकारं भवति ध्येयमात्रं गृह्णाति तदा समाधिरित्यर्थः । तद्ग्रहकाले तु ध्यानमिति ध्यानसमाध्योर्भेदः । अतएवात्यन्ताभ्यर्हितादिविषयेन्द्रियसंनिकर्षे ध्यानभङ्गो भवति न समाधेरिति स्मर्यते । अयं समाधिर्वृत्त्यन्तरनिरोधद्वारैव साक्षात्कारहेतुरिति बोध्यम् ॥३॥

**धारणादित्रयस्य परिभाषासूत्रम्—**

## त्रयमेकत्र संयमः ॥ ४ ॥

**तद्धारणादित्रयम्, एकत्रैकविषये क्रियमाणं संयम इत्युच्यत इत्यर्थः । संयमसिद्धयोऽग्रे वक्ष्यन्ते ॥ ४ ॥**

एतत्त्रयस्य तान्त्रिकीं संज्ञामाह—**त्रयमेकत्र संयमः ।** एकत्र विषये क्रियमाणमेतत्त्रयं संयम इत्युच्यत इत्यर्थः ॥ ४ ॥

**इदानीं संयमस्य योगाङ्गताप्रयोजकं द्वारमाह—**

## तज्जयात्प्रज्ञालोकः ॥ ५ ॥

**तस्य संयमस्य जयः स्थैर्यं तस्मात्प्रज्ञायाः आलोकः दीप्तिः वृद्धिः क्रमेण भवतीत्यर्थः ॥ ५ ॥**

तस्य योगाङ्गताया द्वारमाह—**तज्जयात्प्रज्ञालोकः ।** तस्य संयमस्य जयात्स्थैर्यात् समाधिप्रज्ञाया आलोकः दीप्तिः । दीप्तिः प्रत्ययान्तरानभिभूताया निर्मले प्रवाहेऽवस्थानं भवतीत्यर्थः ॥ ५ ॥

**संयमस्यानुष्ठाने विशेषमाह—**

## तस्य भूमिषु विनियोगः ॥ ६ ॥

**तस्य संयमस्य स्थूलादिपूर्वपूर्वभूमिकाजयानन्तरं सूक्ष्मादिषूत्तरोत्तरभूमिकासु नियोजनं योगिना कार्यमित्यर्थः ॥ ६ ॥**

संयमानुष्ठाने विशेषमाह—**तस्य भूमिषु विनियोगः ।** स्थूलादिपूर्वपूर्वभूमिकाजयानन्तरं सूक्ष्मासूत्तरोत्तरभूमिकासु नियोजनं योगिना कार्यमित्यर्थः । यथा सभूषणसायुधचतुर्भुजमूर्तिसमाधौ सिद्धे आयुधपरित्यागेन तस्यापि सिद्धौ भूषणरहिते ततः सोऽहमिति ततोऽहमिति ॥ ६ ॥

**योगाङ्गानि व्याख्यातानि तेष्वावश्यकत्वानावश्यकत्वविवेकार्थमन्तरङ्गबहिरङ्गविभागमाह द्वाभ्याम्—**

## त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥

**पूर्वेभ्यः पूर्वपादोक्तपञ्चाङ्गेभ्यः सकाशादेतत्पादोक्तं धारणात्रयं योगस्य संप्रज्ञातस्यान्तरङ्गं भवति । उत्तरसूत्रादत्र संप्रज्ञाताख्यविशेषलाभः ॥ ७ ॥**

एवं त्रयाणामत्यावश्यकत्वं प्रतिपादयति—**त्रयमन्तरङ्गं पूर्वेभ्यः ।** पूर्वेभ्यो यमादिपञ्चभ्यः संप्रज्ञातसमाधेरिति शेषः ॥ ७ ॥

## तदपि बहिरङ्गं निर्बीजस्य ॥ ८ ॥

**निर्बीजयोगस्यासंप्रज्ञातस्य तदपि त्रयं बहिरङ्गमेव भवति । विवेकख्यातिपरवैराग्यद्वारा परम्परयैव तद्धेतुत्वेन जन्मान्तरीयेणापि तत्त्रयेणासंप्रज्ञातसंभवादित्यर्थः ॥**

**तदपि बहिरङ्गं निर्बीजस्य ।** तदपि त्रयं निर्बीजस्यासंप्रज्ञातस्य बहिरङ्गमेवेत्यर्थः । विवेकख्यातिपरवैराग्यद्वारा परम्परयैव तद्धेतुत्वेन जन्मान्तरीयेणापि त्रयेणासंप्रज्ञातसंभवादित्यर्थ इति कश्चित् । साध्यसमानविषयत्वेन हि संप्रज्ञातं प्रत्यन्तरङ्गत्वम् । अस्य निर्बीजतया तत्त्वमप्यत्र नास्ति । तेषु चिरनिरुद्धेषु परवैराग्यानन्तरमुत्पादाच्च । तदुक्तं भाष्ये 'तदभावेऽभावात्' इत्यन्ये ॥ ८ ॥

**ज्ञानोपायप्रसंगेन योगाङ्गानि विस्तरतः प्रोक्तानि । इदानीमङ्गभूतस्य समाधेरङ्गिनोश्च योगयोः स्वरूपभेदावधारणाय तदवस्थासु विशेषा वक्तव्याः । तावतैव तयोरङ्गाङ्गिनोः प्रयोजनमपि प्रतिपादितं भविष्यति । तत्रादावङ्गसमाध्यवस्थातोऽङ्गियोगयोरवस्थायां विशेषमाह—**

## व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥ ९ ॥

**व्युत्थानं निरोधश्च योगद्वयसाधारणमेवात्र ग्राह्यम् । केवलस्यासंप्रज्ञातस्य ग्रहणे संप्रज्ञातकालीनपरिणामाकथनाच्न्यूनतापत्तेरिति । अभिभवप्रादुर्भावौ च ह्रासवृद्धी । तथाच व्युत्थानसंस्कारस्य ह्रासो वृत्तिनिरोधसंस्कारस्य वृद्धिर्निरोधकालीनः परिणामः । स च निरोधक्षणेष्वेकस्मिन्नेव स्थिरे चित्ते इत्यतश्चित्तस्थैर्यप्रतिपादनाय चित्तपदम् । निरोधस्य प्रतिक्षणमेतादृशपरिणामलाभाय निरोधक्षणेत्युक्तम् ॥**

अथासंप्रज्ञातस्य किं कार्यं तत्र च तस्य कीदृशः परिणामस्तत्राह—**व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ।** संप्रज्ञातोऽप्यत्र व्युत्थानम् । तत्र व्युत्थानकालिकसंस्काररूपेण तत्र चित्तस्य परिणामः । सर्वक्षणेषु च निरोधलक्षणस्य तत्स्वरूपस्यैव चित्तस्य तत्रान्वय इत्यर्थः ॥ ९ ॥

**ननु वृत्तीनामेव स्मृतिहेतुतया संस्कारजनकत्वं सिद्धं निरोधस्य तु संस्कारजनकत्वे किं प्रमाणं तत्राह—**

## तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥

**तस्य निरोधस्य प्रशान्तवाहिता निश्चलप्रवाहः स्वसंस्कारादेव भवतीत्यर्थः ।**

**निरोधसंस्कारवृद्धेरेवोत्तरोत्तरासंप्रज्ञातव्यक्तीनामधिकाधिककालं प्रशान्तवाहित्वं युक्तमिति भावः ॥ १० ॥**

ननु वृत्तीनां स्मृत्यन्यथानुपपत्त्या संस्कारजनकत्वेऽपि निरोधस्य संस्कारजनकत्वे न मानमत आह—**तस्य प्रशान्तवाहिता संस्कारात्**। तस्य निरोधस्य प्रशान्तवाहिता व्युत्थानसस्काररहितचिरकालवाहिता खसस्कारपाटवादेव भवतीत्यर्थः। सस्कारवृद्ध्यैवोत्तरोत्तरासप्रज्ञातव्यक्तीनामधिककालतेति भाव. ॥१०॥

**अङ्गसमाधेरवस्थायां विशेषमाह—**

## सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ ११ ॥

**सर्वार्थता विक्षिप्तता तस्याः प्रतिक्षणं क्षयस्तिरोभावो भवति। एकाग्रतायाश्चाविर्भावो भवति। अयं समाधिकालीनश्चित्तपरिणाम इत्यर्थः ॥ ११ ॥**

अङ्गभूतसमाधेरवस्थाया विशेषमाह—**सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः**। सर्वार्थता विक्षिप्तता तस्या प्रतिक्षणं क्षय· तिरोभाव एकाग्रतायाश्चाविर्भावो भवति। अयं समाधिकालीनचित्तपरिणाम इत्यर्थ· ॥ ११ ॥

**अङ्गसमाधेरेवोत्तरपरिणामानन्तरकालीनं परिणामान्तरमाह—**

## ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः ॥ १२ ॥

**ततः सर्वार्थताया नि.शेषतः क्षये सति शान्तोदितौ विनष्टोत्पन्नौ तुल्यप्रत्ययावेकाकारप्रत्ययौ चित्तस्यैकाग्रताकालीनः परिणामो भवति। सजातीयैकैकः प्रत्ययो नश्यत्यन्योन्यश्चोत्पद्यत इत्यर्थः। पूर्वधर्मापाये धर्मान्तरोत्पत्तेरेव परिणामत्वादिति भावः ॥ १२ ॥**

तदुत्तरकालं तस्यैव परिणामान्तरमाह—**ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः**। तत सर्वार्थताया नि शेषत· क्षये सति शान्तोदितौ विनष्टोत्पन्नौ तुल्यप्रत्ययौ एकाकारप्रत्ययौ चित्तस्यैकाग्रताकालिक· परिणाम इत्यर्थ। सजातीय एको नश्यति अपर उत्पद्यते इत्येवंरूपतेत्यर्थः। पूर्वधर्मापाये धर्मान्तरोत्पत्तिरेव परिणाम इति भावः ॥ १३ ॥

**इदानीं परिणामत्रयसंयमादित्यागामिसूत्रोपोद्घातसंगत्या सर्ववस्तुषु वैराग्याग्निप्रज्वलनाय चित्तवदेवाखिलप्रपञ्चेऽप्यतिदेशेनैव परिणामान्व्याचष्टे—**

## एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ॥ १३ ॥

**एतेन चित्तस्य परिणामेन भूतेष्विन्द्रियेषु च धर्मैर्लक्षणैरवस्थाभिश्च परिणामा**

**व्याख्याताः । एतदन्यतमैः परिणामैः शून्यं क्षणमपि न किंचिज्जडवस्त्ववतिष्ठत इत्यर्थ. । परिणामश्चान्यथात्वम् । तत्र धर्मिणो धर्मैः परिणामो यथा मृद्धर्मिणः पिण्डरूपधर्मापाये घटधर्मोत्पत्तिः । धर्माणां च लक्षणपरिणामो यथा पिण्डस्य वर्तमानलक्षणापायेऽतीतलक्षणोत्पत्तिः, घटस्य चानागतलक्षणापाये वर्तमानलक्षणोत्पत्तिः । अनागतवर्तमानातीतावस्थासु च तान्त्रिकी लक्षणपरिभाषा । लक्षणानां चावस्थापरिणामो यथा—वर्तमानलक्षण एव घटः प्रतिक्षणं नवपुराणाद्यवस्थाभिरन्यत्वमेति । यद्यपि सर्व एव परिणाम. परमार्थतो धर्मिण एव धर्मादीनां तत्वतो धर्मिस्वरूपत्वात्तथापि व्यावहारिकावान्तररूपैरीदृशोऽपि विभाग उच्यत इति ॥ १३ ॥**

सर्वत्र वैराग्यातिशयाय चित्तवदेव प्रतिक्षणपरिणामित्वं वस्तुमात्रेऽतिदिशति—**एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ।** अनागतवर्तमानातीतावस्थासु लक्षणेति तान्त्रिकी सज्ञा । तत्र चित्तस्य व्युत्थाननिरोधानाभ्यां धर्माभ्या परिणाम तद्धर्माभिभवापरधर्मप्रादुर्भावरूप , धर्मयोश्चानागतं लक्षणं त्यक्त्वा वर्तमानलक्षण यत्र स्वरूपाभिव्यक्ति , ततो वर्तमानलक्षणं त्यक्त्वातीतलक्षण स्वरूपाभिभवरूप । एकैकावस्थायामपि इतरे द्वे स्त एव सत्कार्यवादाभ्युपगमात् । धर्मत्वं त्रिष्वप्यनुस्यूतमेव । एवं पुन पुनर्निरोधजातीय पुन - पुनर्व्युत्थानजातीय अतीतव्यक्ते पुनरनुद्भवात् । धर्माणा वर्तमानलक्षणाना बलवत्त्वाबलवत्त्वे अवस्था, तस्या प्रतिक्षणं तारतम्यं परिणाम । यथा निरोधसंस्कारेषु बलवत्सु दुर्बला व्युत्थानसस्काराः । क्षणमपि परिणामशून्यं न चित्तं गुणाना स्वभावतः प्रवृत्तिशीलत्वात् । एतयैव रीत्या पदार्थमात्रे परिणामा वेदितव्या इत्यतिदेशः । तत्र धर्मिणो धर्मैः परिणामो यथा—मृदो धर्मिण पिण्डरूपधर्मापाये घटरूपधर्माभिव्यक्ति· । तेषा च लक्षणै परिणामा यथा—घटस्यानागतलक्षणापाये वर्तमानलक्षणाविर्भाव । एषैवोत्पत्तिः । वर्तमानलक्षणापायेऽतीतलक्षणाविर्भावः एष एव नाश· । लक्षणाना चावस्थाभिः परिणामो यथा—वर्तमानलक्षण एव घट प्रतिक्षणं नवपुराणपरिणामं वृद्धिह्रासाद्यवस्थाभिरन्यथात्वं याति । एवमिन्द्रियाणामपि तत्तद्रूपाद्यालोचनं धर्मपरिणाम । तेषां च वर्तमानत्वादिः लक्षणपरिणाम· । वर्तमानलक्षणस्य रूपाद्यालोचनस्य स्फुटत्वास्फुटत्वादिरवस्थापरिणामः । इदं च धर्मिणो धर्मलक्षणावस्थाना च काल्पनिकं भेदमाश्रित्योक्तम् । परमार्थस्तु सर्व एव परिणामो धर्मिण एव । धर्मलक्षणावस्थानां धर्मिमात्रस्वरूपत्वात् । धर्मादिपरिणामद्वारा च धर्मिपरिणामस्यैव प्रपञ्चनात् । तत्र धर्मिणस्त्रिविधेऽपि परिणामे संस्थानान्यथात्वमेव न द्रव्यान्यथात्वं स्वर्णकटकादिवत् धर्मधर्मिणोरत्यन्तभेदोऽत्यन्ताभेदश्च नेति तात्पर्यम् । सचायं धर्मी न पुरुषवत्कूटस्थोऽर्थक्रियाकारिणो रूपस्य नाशात् । नाप्यत्यन्तं तुच्छः कदाचिदर्थक्रियादर्शनात् । एवं च परिणामित्वेन पुरुषाद्भिद्यते । मृत्पिण्डाद्यवस्थासु चातीतानागतानां घटादीना सत्वमेव, सर्वदा धर्मत्वानपायस्य भाष्योक्तेः । स्वकारणे लयेन सौक्ष्म्याद-

